दिना ऐहिकदुःखनिवृत्तिं मुक्तस्य दर्शयति। ज्ञानेनाऽज्ञाननिवृत्त्या संचिताऽऽगामिकर्मणामश्लेषविनाशाभ्यामामुष्मिकदुःखानामपि निवृत्तिः । तथा च श्रुतिः "एतं ह वाव न तपति किमहं साधु नाऽकरवं किमहं पापमकरवम्" इत्यादि। दुःखनिवृत्तिर्नाम चतुर्थं प्रयोजनम् ।

मुक्तस्य ज्ञानयोगाभ्यासज्ञानतत्कृताऽऽवरणविक्षेपनिवृत्त्या बाधकाऽभावात्परिपूर्णब्रह्मानन्दाऽनुभवसुखाऽविर्भावः । इममेवार्थं श्रुतिर्दर्शयति—

समाधिनिर्धूतमलस्य चेतसो
निवेशितस्यात्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा
स्वयं तदन्तःकरणेन गृह्यते ॥ इति ।

सुखाऽऽविर्भावो नाम पञ्चमं प्रयोजनम्। एवं स्वरूपप्रमाणसाधनफलनिरूपणैः द्विधा मुक्तिर्निरूपिता ।

तस्माद्ब्रह्मविज्जीवन्मुक्तो भोगेन प्रारब्धकर्मणि क्षीणे वर्त्तमानशरीरपाते ऽखण्डैकरसब्रह्मानन्दात्मना ऽवतिष्ठते । "न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते "ब्रह्मैव सन् ब्रह्माऽप्येति" "ब्रह्म वेद ब्रह्मैव भवति"

विभेदजनके ऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥
तद्भावभावमापन्नस्ततो ऽसौ परमात्मना ।
भवत्यभेदो, भेदश्च तस्याऽज्ञानकृतो भवेत् ॥

इत्यादिश्रुतिस्मृतिशतेभ्यः। भगवान् सूत्रकारोऽप्याह "अस्मिन्नस्य च तद्योगं शास्तीति"। तस्मादहं ब्रह्मास्मीति तत्त्वमस्यादिवाक्यजन्यज्ञानाद्ब्रह्मभावलक्षणो मोक्षो भवतीति सिद्धम् ।

"न स पुनरावर्त्तते"

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥

इत्यादिश्रुतिस्मृतिभ्यः ।

श्रीमत्स्वयंप्रकाशाख्यगुरुणा करुणावशात् ।
उपदिष्टपरात्मैक्यं तत्त्वमावेदितं मया ॥

ब्रह्मेशविष्ण्वादिसमस्तदेवाः
स्वस्वाऽधिकारेषु विभीतचित्ताः ।
अत्त्राज्ञावशाद्यस्य वसन्ति सर्वे
तं कृष्णमाद्यं शरणं प्रपद्ये ॥

या भारती शर्वविरिञ्चिविष्णु-
देवादिभिर्नित्यमुपास्यमाना ।
सदा ऽक्षमालाविलसत्कराग्रां
वाग्वादिनीं तां प्रणमामि देवीम् ॥

आकाशपुष्पमिव विश्वमहं निरीक्षे
मग्नो ऽस्मि नित्यसुखबोधरसाऽमृताब्धौ ।
प्रत्यञ्चमद्वयमनन्तसुखैकबोधं
साक्षात्करोमि पदभावनया गुरूणाम् ॥

यत्पादयुग्मकमलाश्रयणं विना ऽहं
संसारसिन्धुपतितः सुखदुःखभाक् स्याम् ।
यत्पादयुग्मकमलाऽऽश्रयणात् सुतीर्ण-
स्तद्देशिकाऽङ्घ्रिकमलं प्रणतो ऽस्मि नित्यम् ॥

परमसुखपयोधौ मग्नचित्तो महेशं
हरिविधिसुरमुख्यान् देशिकं देहिमात्रम् ।

जगदपि न विजाने पूर्णसत्यात्मसंवित्-
सुखतनुरहमात्मा सर्वसंसारशून्यः ॥

यदुकुलवररत्नं कृष्णमन्यांश्च देवान्
मनुजपशुमृगादीन् ब्राह्मणादींश्च जाने ।
परमसुखसमुद्रे मज्जनात्तन्मयोऽहं
गलितनिखिलभेदः सत्यबोधैकरूपः ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमत्स्वयंप्रकाशानन्दसरस्वती-
पूज्यपादशिष्यभगवन्महादेवसरस्वतीमुनिविरचिते
तत्त्वाऽनुसंधान चतुर्थः परिच्छेदः ।

समाप्तश्चाऽयं ग्रन्थः ॥

शुभं भवतु ।

